# ॥ श्रीत्रिपुरसुन्दरीचक्रराजस्तोत्रम् ॥

॥ क॥

कर्तुं देवि ! जगद्-विलास-विधिना सृष्टेन ते मायया
सर्वानन्द-मयेन मध्य-विलसच्छ्री-विनदुनाऽलङ्कृतम् ।
श्रीमद्-सद्-गुरु-पूज्य-पाद-करुणा-संवेद्य-तत्त्वात्मकं
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ १॥

॥ ए॥

एकस्मिन्नणिमादिभिर्विलसितं भूमी-गृहे सिद्धिभिः
वाह्याद्याभिरुपाश्रितं च दशभिर्मुद्राभिरुद्भासितम् ।
चक्रेश्या प्रकतेड्यया त्रिपुरया त्रैलोक्य-सम्मोहनं
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ २॥

॥ ई॥

ईड्याभिर्नव-विद्रुम-च्छवि-समाभिख्याभिरङ्गी-कृतं
कामाकर्षिणी कादिभिः स्वर-दले गुप्ताभिधाभिः सदा ।
सर्वाशा-परि-पूरके परि-लसद्-देव्या पुरेश्या युतं
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ ३॥

॥ ल॥

लब्ध-प्रोज्ज्वल-यौवनाभिरभितोऽनङ्ग-प्रसूनादिभिः
सेव्यं गुप्त-तराभिरष्ट-कमले सङ्क्षोभकाख्ये सदा ।
चक्रेश्या पुर-सुन्दरीति जगति प्रख्यातयासङ्गतं
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ ४॥

॥ ह्रीं॥

ह्रीङ्काराङ्कित-मन्त्र-राज-निलयं श्रीसर्व-सङ्क्षोभिणी
मुख्याभिश्चल-कुन्तलाभिरुषितं मन्वस्र-चक्रे शुभे ।
यत्र श्री-पुर-वासिनी विजयते श्री-सर्व-सौभाग्यदे
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ ५॥

॥ ह॥

हस्ते पाश-गदादि-शस्त्र-निचयं दीप्तं वहन्तीभिः
उत्तीर्णाख्याभिरुपास्य पाति शुभदे सर्वार्थ-सिद्धि-प्रदे ।
चक्रे बाह्य-दशारके विलसितं देव्या पूर्-श्र्याख्यया
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ ६॥

॥ स॥

सर्वज्ञादिभिरिनदु-कान्ति-धवला कालाभिरारक्षिते
चक्रेऽन्तर्दश-कोणकेऽति-विमले नाम्ना च रक्षा-करे ।
यत्र श्रीत्रिपुर-मालिनी विजयते नित्यं निगर्भा स्तुता
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ ७॥

॥ क॥

कर्तुं मूकमनर्गल-स्रवदित-द्राक्षादि-वाग्-वैभवं
दक्षाभिर्वशिनी-मुखाभिरभितो वाग्-देवताभिर्युताम् ।
अष्टारे पुर-सिद्धया विलसितं रोग-प्रणाशे शुभे
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ ८॥

॥ ह॥

हन्तुं दानव-सङ्घमाहव भुवि स्वेच्छा समाकल्पितैः
शस्त्रैरस्त्र-चयैश्च चाप-निवहैरत्युग्र-तेजो-भरैः ।
आर्त-त्राण-परायणैररि-कुल-प्रध्वंसिभिः संवृतं
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ ९॥

॥ ल॥

लक्ष्मी-वाग-गजादिभिः कर-लसत्-पाशासि-घण्टादिभिः
कामेश्यादिभिरावृतं शुभ~ण्करं श्री-सर्व-सिद्धि-प्रदम् ।
चक्रेशी च पुराम्बिका विजयते यत्र त्रिकोणे मुदा
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ १०॥

॥ ह्रीं॥

ह्रीङ्कारं परमं जपद्भिरनिशं मित्रेश-नाथादिभिः
दिव्यौघैर्मनुजौघ-सिद्ध-निवहैः सारूप्य-मुक्तिं गतैः ।
नाना-मन्त्र-रहस्य-विद्भिरखिलैरन्वासितं योगिभिः

श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ ११॥

॥ स॥

सर्वोत्कृष्ट-वपुर्धराभिरभितो देवी समाभिर्जगत्
संरक्षार्थमुपागताऽभिरसकृन्नित्याभिधाभिर्मुदा ।
कामेश्यादिभिराज्ञयैव ललिता-देव्याः समुद्भासितं
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ १२॥

॥ क॥

कर्तुं श्रीललिताङ्ग-रक्षण-विधिं लावण्य-पूर्णां तनूं
आस्थायास्त्र-वरोल्लसत्-कर-पयोजाताभिरध्यासितम् ।
देवीभिर्हृदयादिभिश्च परितो विन्दुं सदाऽऽनन्ददं
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ १३॥

॥ ल॥

लक्ष्मीशादि-पदैर्युतेन महता मञ्चेन संशोभितं
षट्-त्रिंशद्भिरनर्घ-रत्न-खचितैः सोपानकैर्भूषितम् ।
चिन्ता-रत्न-विनिर्मितेन महता सिंहासनेनोज्ज्वलं
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ १४॥

॥ ह्रीं॥

ह्रीङ्कारैक-महा-मनुं प्रजपता कामेश्वरेणोषितं
तस्याङ्के च निषण्णया त्रि-जगतां मात्रा चिदाकिरया ।
कामेश्या करुणा-रसैक-निधिना कल्याण-दात्र्या युतं
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ १५॥

॥ श्रीं॥

श्रीमत्-पञ्च-दशाक्षरैक-निलयं श्रीषोडशी-मन्दिरं
श्रीनाथादिभिरर्चितं च बहुधा देवैः समाराधितम् ।
श्रीकामेश-रहस्सखी-निलयनं श्रीमद्-गुहाराधितं
श्री-चक्रं शरणं व्रजामि सततं सर्वेष्ट-सिद्धि-प्रदम् ॥ १६॥